त्रसेर्डर-बोज्ज-वज्जाः ॥ १९८ ॥

त्रसेरेते त्रय आदेशा वा भवन्ति ॥ डरइ । बोज्जइ । वज्जइ । तसइ ॥

न्यसो णिम-णुमौ ॥ १९९ ॥

न्यस्यतेरेतावादेशौ भवतः ॥ णिमइ । णुमइ ॥

पर्यसः पलोट्ट-पल्लट्ट-पल्हत्थाः ॥ २०० ॥

पर्यस्यतेरेते त्रय आदेशा भवन्ति ॥ पलोट्टइ । पल्लट्टइ । पल्हत्थइ ॥

निःश्वसेर्झङ्खः ॥ २०१ ॥

निःश्वसेर्झङ्ख इत्यादेशो वा भवति ॥ झङ्खइ । नीससइ ॥

उल्लसेरूसलोसुम्भ-णिल्लस-पुलआअ-गुञ्जोल्लारोआः ॥२०२॥

उल्लसेरेते षडादेशा वा भवन्ति ॥ ऊसलइ । ऊसुम्भइ । णिल्लसइ । पुलआअइ । गुञ्जोल्लइ । ह्रस्वत्वे तु । गुञ्जुल्लइ । आरोअइ । उल्लसइ ॥

भासेर्भिसः ॥ २०३ ॥

भासेर्भिस इत्यादेशो वा भवति ॥ भिसइ । भासइ ॥

ग्रसेर्घिसः ॥ २०४ ॥

ग्रसेर्घिस इत्यादेशो वा भवति ॥ घिसइ । गसइ ॥

अवाद्गाहेर्वाहः ॥ २०५ ॥

अवात्परस्य गाहेर्वाह इत्यादेशो वा भवति ॥ ओवाहइ । ओगाहइ ॥

आरुहेश्चड-वलग्गौ ॥ २०६ ॥

आरुहेरेतावादेशौ वा भवतः ॥ चडइ । वलग्गइ । आरुहइ ॥

मुहेर्गुम्म-गुम्मडौ ॥ २०७ ॥

मुहेरेतावादेशौ वा भवतः ॥ गुम्मइ । गुम्मडइ । मुज्झइ ॥

---

१ B ड्वा°. २ B ड्गा°.

**दहेरहिऊलालुङ्खौ ॥ २०८ ॥**

दहेरेतावादेशौ वा भवतः ॥ अहिऊलइ । आलुङ्खइ । डहइ ॥

**ग्रहो वल-गेण्ह-हर-पङ्ग-निरुवाराहिपच्चुआः ॥ २०९ ॥**

ग्रहेरेते षडादेशा भवन्ति ॥ वलइ । गेण्हइ । हरइ । पङ्गइ । निरुवा-रइ । अहिपच्चुअइ ॥

**क्त्वा-तुम्-तव्येषु घेत् ॥ २१० ॥**

ग्रहेः क्त्वातुम्तव्येषु घेत् इत्यादेशो भवति ॥ क्त्वा । घेत्तूण । घेत्तुआण ॥ क्वचिन्न भवति । गेण्हिअ ॥ तुम् । घेत्तुं ॥ तव्य । घे-त्तव्वं ॥

**वचो वोत् ॥ २११ ॥**

वक्तेर्वोत् इत्यादेशो भवति क्त्वातुम्तव्येषु ॥ वोत्तूण । वोत्तुं । वोत्तव्वं ॥

**रुद-भुज-मुचां तोऽन्त्यस्य ॥ २१२ ॥**

एषामन्त्यस्य क्त्वातुम्तव्येषु तो भवति ॥ रोत्तूण । रोत्तुं । रोत्तव्वं ॥ भोत्तूण । भोत्तुं । भोत्तव्वं ॥ मोत्तूण । मोत्तुं । मोत्तव्वं ॥

**दृशस्तेन ट्ठः ॥ २१३ ॥**

दृशोऽन्त्यस्य तकारेण सह द्विरुक्तठकारो भवति ॥ दट्ठूण । दट्ठुं । दट्ठव्वं ॥

**आः कृगो भूत-भविष्यतोश्च ॥ २१४ ॥**

कृगोऽन्त्यस्य आ इत्यादेशो भवति भूतभविष्यत्कालयोश्चकारात् क्त्वातुम्तव्येषु च ॥ काहीअ । अकार्षीत् । अकरोत् । चकार वा ॥ काहिइ । करिष्यति । कर्ता वा ॥ क्त्वा । काऊण ॥ तुम् । काउं ॥ तव्य । कायव्वं ॥

---

१ B °च्चुइ. २ B ग्रहेः. ३ A B घेत्तूआण. ४ A °वोदादे°. ५ P रुद°. ६ B रो°. ७ B °षु परतः तो. ८ A ट्ठ.. ९ P आ कृ°. १० A °ष्यतेश्च.

**गमिष्यमासां छः ॥ २१५ ॥**

एषामन्त्यस्य छो भवति ॥ गच्छइ । इच्छइ । जच्छइ । अच्छइ ॥

**छिदि-भिदो न्दः ॥ २१६ ॥**

अनयोरन्त्यस्य नकाराक्रान्तो दकारो भवति ॥ छिन्दइ । भिन्दइ ॥

**युध-बुध-गृध-क्रुध-सिध-मुहां ज्झः ॥ २१७ ॥**

एषामन्त्यस्य द्विरुक्तो झो भवति ॥ जुज्झइ । बुज्झइ । गिज्झइ । कुज्झइ । सिज्झइ । मुज्झइ ॥

**रुधो न्ध-म्भौ च ॥ २१८ ॥**

रुधोन्त्यस्य न्ध म्भ इत्येतौ चकारात् ज्झश्च भवति ॥ रुन्धइ । रुम्भइ । रुज्झइ ॥

**सद-पतोर्डः ॥ २१९ ॥**

अनयोरन्त्यस्य डो भवति ॥ सडइ । पडइ ॥

**क्वथ-वर्धां ढः ॥ २२० ॥**

अनयोरन्त्यस्य ढो भवति ॥ कढइ । वड्ढइ पवय-कलयलो ॥ परिअ-ड्ढइ लायण्णं ॥ बहुवचनाद् वृधेः कृतगुणस्य वर्धेश्चाविशेषेण ग्रहणम् ॥

**वेष्टः ॥ २२१ ॥**

वेष्ट वेष्टने इत्यस्य धातोः कगटड इत्यादिना [२.७७.] षलोपेन्त्यस्य ढो भवति ॥ वेढइ । वेढिज्जइ ॥

**समो ल्लः ॥ २२२ ॥**

संपूर्वस्य वेष्टतेरन्त्यस्य द्विरुक्तो लो भवति ॥ संवेल्लइ ॥

**वोदः ॥ २२३ ॥**

उदः परस्य वेष्टतेरन्त्यस्य ल्लो वा भवति ॥ उव्वेल्लइ उव्वेढइ ॥

---

१ A °मंतस्य. २ P भवन्ति. ३ A °रंतस्य. ४ A वेष्ठः. B वेष्टेः. ५ A विष्टि. ६ B वेष्टेर°.

**स्विदां ज्जः ॥ २२४ ॥**

स्विदिप्रकाराणामन्त्यस्य द्विरुक्तो जो भवति ॥ सव्वङ्ग-सिज्जिरीए । संपज्जइ । खिज्जइ ॥ बहुवचनं प्रयोगानुसरणार्थम् ॥

**व्रज-नृत-मदां च्चः ॥ २२५ ॥**

एषामन्त्यस्य द्विरुक्तश्चो भवति ॥ वच्चइ । नच्चइ । मच्चइ ॥

**रुद-नमोर्वः ॥ २२६ ॥**

अनयोरन्त्यस्य वो भवति ॥ रुवइ । रोवइ । नवइ ॥

**उद्विजः ॥ २२७ ॥**

उद्विजतेरन्त्यस्य वो भवति ॥ उव्विवइ । उव्वेवो ॥

**खाद-धावोर्लुक् ॥ २२८ ॥**

अनयोरन्त्यस्य लुग् भवति ॥ खाइ । खाअइ । खाहिइ । खाउ । धाइ । धाहिइ । धाउ ॥ बहुलाधिकाराद्वर्तमानाभविष्यद्विध्याद्येकवचन एव भवति । तेनेह न भवति । खादन्ति । धावन्ति ॥ क्वचिन्न भवति । धावइ पुरओ ॥

**सृजो रः ॥ २२९ ॥**

सृजो धातोरन्त्यस्य रो भवति ॥ निसिरइ । वोसिरइ । वोसिरामि ॥

**शकादीनां द्वित्वम् ॥ २३० ॥**

शकादीनामन्त्यस्य द्वित्वं भवति ॥ शक् । सक्कइ ॥ जिम् । जिम्मइ ॥ लग् । लग्गइ ॥ मग् । मग्गइ ॥ कुप् । कुप्पइ ॥ नश् । नस्सइ ॥ अट् । परिअट्टइ ॥ लुट् । पलोट्टइ ॥ तुट् । तुट्टइ ॥ नट् । नट्टइ ॥ सिव् । सिव्वइ । इत्यादि ॥

---

१ A °मंतस्य. २ A °रंतस्य. ३ P णवइ. ४ B खाओ. ५ B °इ । धाअइ । धाहि°. ६ B धाओ. ७ A B सिन् । सिव्वइ.

स्फुटि-चलेः ॥ २३१ ॥

अनयोरन्त्यस्य द्वित्वं वा भवति ॥ फुट्टइ फुडइ । चल्लइ चलइ ॥

प्रादेर्मीलेः[1] ॥ २३२ ॥

प्रादेः परस्य मीलेरन्त्यस्य द्वित्वं वा भवति ॥ पमिल्लइ पमीलइ । निमिल्लइ निमीलइ । संमिल्लइ संमीलइ । उम्मिल्लइ उम्मीलइ[2] ॥ प्रादेरिति किम् । मीलइ ॥

उवर्णस्यावः ॥ २३३ ॥

धातोरन्त्यस्योवर्णस्य अवादेशो[3] भवति ॥ न्हुङ् । निण्हवइ[4] ॥ हु । निहवइ ॥ च्युङ् । चवइ ॥ रु । रवइ ॥ कु । कवइ ॥ सू । सवइ । पसवइ ॥

ऋवर्णस्यारः ॥ २३४ ॥

धातोरन्त्यस्य[5] ऋवर्णस्य अरादेशो भवति ॥ करइ । धरइ । मरइ[6] । वरइ । सरइ । हरइ । तरइ । जरइ ॥

वृषादीनामरिः ॥ २३५ ॥

वृष इत्येवंप्रकाराणां धातूनाम् ऋवर्णस्य अरिः इत्यादेशो भवति ॥ वृष् । वरिसइ ॥ कृष् । करिसइ ॥ मृष् । मरिसइ ॥ हृष् । हरिसइ ॥ येषामरिरादेशो दृश्यते ते वृषादयः ॥

रुषादीनां दीर्घः ॥ २३६ ॥

रुष इत्येवंप्रकाराणां धातूनां स्वरस्य दीर्घो भवति ॥ रूसइ । तूसइ । सूसइ । दूसइ । पूसइ । सीसइ । इत्यादि ॥

युवर्णस्य गुणः ॥ २३७ ॥

धातोरिवर्णस्योवर्णस्य च क्डित्यपि गुणो भवति ॥ जेऊण । नेऊण ।

---

१ A °मीलः. २ A उमीलइ. ३ B °शो वा भ°. ४ P B °इ । नि°. ५ A °रंतस्य. ६ A °इ । स°. ७ B °इ । हृष् । हरिसइ । मृ°.

नेइ । नेन्ति । उड्डेइ । उड्डेन्ति । मोत्तूण । सोऊण ॥ क्वचिन्न भवति । नीओ । उड्डीणो ॥

**स्वराणां स्वराः ॥ २३८ ॥**

धातुषु स्वराणां स्थाने स्वरा बहुलं भवन्ति ॥ हवइ । हिवइ ॥ चिणइ । चुणइ ॥ सद्दहणं । सद्दहाणं ॥ धावइ । धुवइ ॥ रुवइ । रोवइ ॥ क्वचिन्नित्यम् । देइ । लेइ । विहेइ । नासइ ॥ आर्षे । बेमि ॥

**व्यञ्जनाददन्ते ॥ २३९ ॥**

व्यञ्जनान्ताद्धातोरन्ते अकारो भवति ॥ भमइ । हसइ । कुणइ । चुम्बइ । भणइ । उवसमइ । पावइ । सिञ्चइ । रुन्धइ । मुसइ । हरइ । करइ ॥ शबादीनां च प्रायः प्रयोगो नास्ति ॥

**स्वरादनतो वा ॥ २४० ॥**

अकारान्तवर्जितात्स्वरान्ताद्धातोरन्ते अकारागमो वा भवति ॥ पाइ पाअइ । धाइ धाअइ । जाइ जाअइ । झाइ झाअइ । जम्भाइ जम्भाअइ । उव्वाइ उव्वाअइ । मिलाइ मिलाअइ । विक्केइ विक्केअइ । होऊण होइऊण ॥ अनत इति किम् । चिइच्छइ । दुगुच्छइ ॥

**चि-जि-श्रु-हु-स्तु-लू-पू-धूगां णो ह्रस्वश्च ॥ २४१ ॥**

च्यादीनां धातूनामन्ते णकारागमो भवति एषां स्वरस्य च ह्रस्वो भवति ॥ चि । चिणइ ॥ जि । जिणइ ॥ श्रु । सुणइ ॥ हु । हुणइ ॥ स्तु । थुणइ ॥ लू । लुणइ ॥ पू । पुणइ ॥ धूग् । धुणइ ॥ बहुलाधिकारात्क्वचिद्विकल्पः । उच्चिणइ । उच्चेइ ॥ जेऊण । जिणिऊण ॥ जयइ । जिणइ ॥ सोऊण । सुणिऊण ॥

**न वा कर्म-भावे व्वः क्यस्य च लुक् ॥ २४२ ॥**

च्यादीनां कर्मणि भावे च वर्तमानानामन्ते द्विरुक्तो वकारागमो

---

१ A °इ । कणइ । चुं. २ B थवा°. ३ A P होअऊण. ४ B °हु. ५ P B च दीर्घस्य ह्र. ६ B हु. ७ B बेबी.

वा भवति तत्सन्नियोगे च क्यस्य लुक् ॥ चिव्वइ चिणिज्जइ । जिव्वइ जिणिज्जइ । सुव्वइ सुणिज्जइ । हुव्वइ हुणिज्जइ । थुव्वइ थुणिज्जइ । लुव्वइ लुणिज्जइ । पुव्वइ पुणिज्जइ । धुव्वइ धुणिज्जइ ॥ एवं भविष्यति । चिव्विहिइ । इत्यादि ॥

**म्मश्चेः ॥ २४३ ॥**

चिगः कर्मणि भावे च अन्ते संयुक्तो मो वा भवति तत्सन्नियोगे[1] क्यस्य च लुक् ॥ चिम्मइ । चिव्वइ । चिणिज्जइ ॥ भविष्यति । चिम्मिहिइ । चिव्विहिइ । चिणिहिइ ॥

**हन्खनोन्त्यस्य[2] ॥ २४४ ॥**

अनयोः[3] कर्मभावेन्त्यस्य द्विरुक्तो मो वा भवति तत्सन्नियोगे क्यस्य च लुक् ॥ हम्मइ हणिज्जइ । खम्मइ खणिज्जइ ॥ भविष्यति । हम्मिहिइ हणिहिइ । खम्मिहिइ खणिहिइ ॥ बहुलाधिकाराद्धन्तेः कर्तर्यपि ॥ हम्मइ । हन्तीत्यर्थः ॥ क्वचिन्न भवति ॥ हन्तव्वं । हन्तूर्ण[4] । हओ ॥

**ब्भो दुह-लिह-वह-रुधामुच्चातः ॥ २४५ ॥**

दुहादीनामन्त्यस्य[5] कर्मभावे द्विरुक्तो भो[6] वा भवति तत्सन्नियोगे क्यस्य च लुक् वहेरकारस्य च उकारः ॥ दुब्भइ दुहिज्जइ । लिब्भइ । लिहिज्जइ । वुब्भइ वहिज्जइ । रुब्भइ[7] रुन्धिज्जइ । भविष्यति । दुब्भिहिइ दुहिहिइ । इत्यादि ॥

**दहो ज्झः ॥ २४६ ॥**

दहोन्त्यस्य[8] कर्मभावे द्विरुक्तो झो[9] वा भवति[10] तत्सन्नियोगे क्यस्य च लुक् ॥ डज्झइ । डहिज्जइ[11] । भविष्यति । डज्झिहिइ[12] । डहिहिइ ॥

---

१ B °गे न क्यस्य लुक्. २ A °नोन्तस्य. ३ A ०ोः मनुगः कर्मणि भावे चांते संयुक्तो मो वा भ°. ४ B हंतुणं. ५ A °मंतस्य. ६ B ब्भो. ७ B रुंब्भइ. ८ A °न्तस्य. ९ B ज्झो. १० B तित्स°. ११ PB डहि°. १२ A डज्झहिइ.

**बन्धो न्धः ॥ २४७ ॥**

बन्धेर्धातोरन्त्यस्य[1] न्ध इत्यवयवस्य[2] कर्मभावे ज्झो वा भवति तत्सन्नियोगे क्यस्य च लुक् ॥ बज्झइ। बन्धिज्जइ ॥ भविष्यति। बज्झिहिइ[3]। बन्धिहिइ ॥

**समनूपाद्रुधेः ॥ २४८ ॥**

समनूपेभ्यः परस्य रुधेरन्त्यस्य[4] कर्मभावे ज्झो वा भवति तत्सन्नियोगे क्यस्य च लुक् ॥ संरुज्झइ। अणुरुज्झइ। उवरुज्झइ। पक्षे। संरुन्धिज्जइ। अणुरुन्धिज्जइ। उवरुन्धिज्जइ ॥ भविष्यति। संरुज्झिहिइ। संरुन्धिहिइ। इत्यादि ॥

**गमादीनां द्वित्वम् ॥ २४९ ॥**

गमादीनामन्त्यस्य[5] कर्मभावे द्वित्वं वा भवति तत्सन्नियोगे क्यस्य च लुक् ॥ गम्। गम्मइ। गमिज्जइ ॥ हस्। हस्सइ। हसिज्जइ ॥ भण्। भण्णइ[6]। भणिज्जइ। छुप्। छुप्पइ। छुविज्जइ ॥ रुद-नमोर्वः [४.२२६] इति कृतवकारादेशो रुदिरत्र[7] पठ्यते। रुव। रुव्वइ। रुविज्जइ[8] ॥ लभ्। लब्भइ। लहिज्जइ ॥ कथ्। कत्थइ। कहिज्जइ ॥ भुज्। भुज्जइ ॥ भुञ्जिज्जइ ॥ भविष्यति। गम्मिहिइ। गमिहिइ। इत्यादि ॥

**हृ-कृ-तृ-ज्रामीरः ॥ २५० ॥**

एषामन्त्यस्य[9] ईर इत्यादेशो वा भवति तत्सन्नियोगे[10] च क्यलुक् ॥ हीरइ हरिज्जइ। कीरइ करिज्जइ। तीरइ तरिज्जइ। जीरइ जरिज्जइ ॥

**अर्जेर्विढप्पः ॥ २५१ ॥**

अन्त्यस्येति निवृत्तम्। अर्जेर्विढप्प इत्यादेशो वा भवति तत्सन्नियोगे क्यस्य च लुक् ॥ विढप्पइ। पक्षे। विढविज्जइ। अज्जिज्जइ ॥

---

१ A °रंतस्य. २ B °त्यस्याव°. ३ B बज्झेहिइ. ४ B रुधेः क°. ५ A °मंतस्य. ६ P भण्णए। भणिज्जए. ७ A °दित्यत्र प°. B °दिरत्रोच्यते. ८ B रुव्विज्जइ. ९ B °कृ°. १० P °गे क्यलुक् च. B °गे क्यस्य च लुक्.

**ज्ञो णव्व-णज्जौ ॥ २५२ ॥**

जानातेः कर्मभावे णव्व णज्ज इत्यादेशौ वा भवतः तत्सन्नियोगे क्यस्य च लुक् ॥ णव्वइ णज्जइ । पक्षे । जाणिज्जइ । मुणिज्जइ ॥ म्न-ज्ञोर्णः [२.४२] इति णादेशे तु । णाइज्जइ ॥ नञ्पूर्वकस्य । अणाइज्जइ ॥

**व्याहृगेर्वाहिप्पः ॥ २५३ ॥**

व्याहरतेः कर्मभावे वाहिप्प इत्यादेशो वा भवति तत्सन्नियोगे क्यस्य च लुक् ॥ वाहिप्पइ । वाहरिज्जइ ॥

**आरभेराढप्पः ॥ २५४ ॥**

आङ्पूर्वस्य[1] रभेः कर्मभावे आढप्प इत्यादेशो वा भवति क्यस्य[2] च लुक् ॥ आढप्पइ । पक्षे । आढवीअइ ॥

**स्निह-सिचोः सिप्पः ॥ २५५ ॥**

अनयोः कर्मभावे सिप्प इत्यादेशो[4] भवति क्यस्य च लुक् ॥ सिप्पइ । स्निह्यते । सिच्यते वा ॥

**ग्रहेर्घेप्पः ॥ २५६ ॥**

ग्रहेः कर्मभावे घेप्प इत्यादेशो वा भवति क्यस्य च लुक् ॥ घेप्पइ । गिण्हिज्जइ[5] ॥

**स्पृशेश्छिप्पः ॥ २५७ ॥**

स्पृशतेः कर्मभावे छिप्पादेशो वा भवति क्यलुक् च ॥ छिप्पइ । छिविज्जइ ॥

---

१ A °पूर्वस्य. २ P B क्यलुक् च । ३ B स्नेह°. ४ A °शो वा भ°. ५ B गेण्हि°.

**क्तेनाप्फु[1]णादयः ॥ २५८ ॥**

अप्फुण्णादयः शब्दा आक्रमिप्रभृतीनां धातूनां स्थाने क्तेन सह[2] वा निपात्यन्ते ॥ अप्फुण्णो[3] । आक्रान्तः ॥ उक्कोसं । उत्कृष्टम् ॥ फुडं । स्पष्टम् ॥ वोलीणो । अतिक्रान्तः ॥ वोसट्टो[4] । विकसितः ॥ निसुट्टो[5] । निपातितः ॥ लुग्गो । रुग्णः ॥ ल्हिक्को । नष्टः ॥ पम्हुट्ठो । प्रमृष्टः प्रमुषितो वा ॥ विढत्तं[6] । अर्जितम् ॥ छित्तं । स्पृष्टम् ॥ निमिअं । स्थापितम् ॥ चक्खिअं । आस्वादितम् ॥ लुअं[7] । लूनम् ॥ जढं । त्यक्तम् ॥ झोसिअं[8] । क्षिप्तम् ॥ निच्छूढं । उद्धृत्तम्[9] ॥ पल्हत्थं पलोट्टं[10] च । पर्यस्तम् ॥ हीसमणं । हेषितम् । इत्यादि ॥

**धातवोर्थान्तरेपि ॥ २५९ ॥**

उक्तादर्थादर्थान्तरेपि धातवो वर्तन्ते ॥ बलिः प्राणने पठितः खादनेपि वर्तते । बलइ । खादति प्राणनं करोति वा ॥ एवं कलिः संख्याने संज्ञानेपि । कलइ । जानाति संख्यानं करोति वा ॥ रिगिर्गतौ प्रवेशेपि ॥ रिगइ[11] । प्रविशति गच्छति वा ॥ काङ्क्षेर्वम्फ आदेशः प्राकृते । वम्फइ । अस्यार्थः । इच्छति[12] खादति वा ॥ फक्कतेस्थक्क आदेशः । थक्कइ । नीचां गतिं करोति विलम्बयति[13] वा ॥ विलप्युपालम्भ्योर्झङ्ख[14] आदेशः । झङ्खइ । विलपति उपालभते भाषते वा ॥ एवं पडिवालेइ[15] । प्रतीक्षते रक्षति वा ॥ केचित् केश्चिदुपसर्गैर्नित्यम् । पहरइ । युध्यते ॥ संहरइ । संवृणोति ॥ अणुहरइ । सदृशीभवति ॥ नीहरइ । पुरीषोत्सर्गं करोति ॥ विहरइ । क्रीडति[16] ॥ आहरइ । खादति ॥ पडिहरइ । पुनः पूरयति ॥ परिहरइ । त्यजति ॥ उवहरइ । पूजयति ॥ वाहरइ । आह्वयति ॥ पवसइ । देशान्तरं गच्छति ॥ उच्चुपइ[18] । चटति ॥ उल्लुहइ । निःसरति[19] ॥

---

१ A °नाप्फुण्णा°. २ B सह नि . ३ A अप्फुण्णो. ४ B °सट्टो. ५ B °सुट्टो. ६ A वेढत्तं. ७ A लूअं. ८ A °झोसिअं. ९ P उद्धूतं. १० B पल्लोट्टं. ११ P रिंगइ. B रिंगइ. १२ B बुच्छति. १३ B विडंब . १४ A °पालंभे झंख°. P °पालम्भो°. १५ A °पइ. १६ P B °वालइ. १७ A क्रीणाति. १८ P उच्छुपइ. १९ B °ति ॥ अथ शौरसेनी ॥ नों°.

**तो दोनादौ शौरसेन्यामयुक्तस्य ॥ २६० ॥**

शौरसेन्यां भाषायामनादावपदादौ वर्तमानस्य तकारस्य दकारो भवति न चेदसौ वर्णान्तरेण संयुक्तो भवति ॥ तदो पूरिद-पदिञ्ञेन[1] मारुदिना मन्तिदो ॥ एतस्मात् । एदाहि । एदाओ ॥ अनादाविति किम् । तधा करेध जधा तस्स राइणो अणुकम्पणीआ भोमि ॥ अयुक्तस्येति किम् । मत्तो । अय्यउत्तो[2] । असंभाविद-सक्कारं । हला सउन्तले ॥

**अधः क्वचित् ॥ २६१ ॥**

वर्णान्तरस्याधोवर्तमानस्य तस्य शौरसेन्यां दो भवति । क्वचिल्लक्ष्यानुसारेण ॥ महन्दो । निच्चिन्दो । अन्देउरं ॥

**वादेस्तावति[3] ॥ २६२ ॥**

शौरसेन्यां तावच्छब्दे आदेस्तकारस्य दो वा भवति ॥ दाव । ताव ॥

**आ आमन्त्र्ये[4] सौ वेनो नः ॥ २६३ ॥**

शौरसेन्यामिनो नकारस्य आमन्त्र्ये सौ परे आकारो वा भवति ॥ भो कञ्चुइआ । सुहिआ[5] । पक्षे । भो तवस्सि । भो मणस्सि ॥

**मो वा ॥ २६४ ॥**

शौरसेन्यामामन्त्र्ये सौ परे नकारस्य मो वा भवति ॥ भो रायं । भो विअयवम्मं । सुकम्मं । भयवं कुसुमाउह । भयवं तित्थं पवत्तेह । पक्षे । सयल-लोअ-अन्तेआरि भयवं[6] हुदवह ॥

**भवद्भगवतोः ॥ २६५ ॥**

आमन्त्र्य इति निवृत्तम् । शौरसेन्यामनयोः सौ परे नस्य मो भवति ॥ किं एत्थभवं हिदएण चिन्तेदि । एदु भवं[7] । समणे भगवं[8] महावीरे ॥

---

१ P °ञ्ञेण मारुदिणा म°. २ A अज्जउ°. ३ B °ति शौरसेन्यां ॥ ६२ ॥ ताव°. ४ A आमन्त्र्ये. ५ P भो सुहिआ. ६ A भयवं. ७ B भवम्. ८ P भयवं.

पञ्जलिदो भयवं हुदासणो ॥ क्वचिदन्यत्रापि । भयवं पागसासणे । संपाइअवं सीसो[1] । कयवं । करेमि काहं च ॥

**न वा र्यो य्यः ॥ २६६ ॥**

शौरसेन्यां र्यस्य स्थाने य्यो वा भवति ॥ अय्यउत्त पय्याकुलीकदह्मि[2] । सुय्यो । पक्षे । अज्जो । पज्जाउलो । कज्ज-परवसो ॥

**थो[3] धः ॥ २६७ ॥**

शौरसेन्यां थस्य धो वा भवति ॥ कधेदि कहेदि । णाधो णाहो । कधं कहं । राज-पधो राज-पहो ॥ अपदादावित्येव । थामं । थेओ ॥

**इह-हचोर्हस्य ॥ २६८ ॥**

इहशब्दसंबन्धिनो मध्यमस्येत्था-हचौ [३.१४३] इति विहितस्य हचश्च हकारस्य शौरसेन्यां धो वा भवति[4] ॥ इध । होध । परित्तायध ॥ पक्षे । इह । होह । परित्तायह ॥

**भुवो भः ॥ २६९ ॥**

भवतेर्हकारस्य शौरसेन्यां भो वा भवति ॥ भोदि होदि । भुवदि हुवदि । भवदि हवदि ॥

**पूर्वस्य पुरवः ॥ २७० ॥**

शौरसेन्यां पूर्वशब्दस्य पुरव इत्यादेशो वा भवति ॥ अपुरवं[5] नाडयं । अपुरवागदं[6] । पक्षे । अपुव्वं पदं । अपुव्वागदं[7] ॥

**क्त्व इय-दूणौ[8] ॥ २७१ ॥**

शौरसेन्यां क्त्वाप्रत्ययस्य इय दूण इत्यादेशौ वा भवतः ॥ भविय भोदूण । हविय होदूण । पढिय पढिदूण[9] । रमिय रन्दूण । पक्षे भोत्ता । होत्ता । पढित्ता । रन्ता[10] ॥

---

१ A °सो । संपादितवान् शिष्यः । क°. २ A अय्या°. ३ B थो धः शौरसेन्यां ॥ १७ ॥ थ°. ४ A °ति ॥ इह । इध. ५ A °रवयं ना°. ६ B °वादग°. ७ A °दं । अपुव्वागदं. ८ P B °अ. ९ A °ण । मरिय । मरिदूण । र°. १० P रन्नूत्ता.

क्रु-गमो डडुअः ॥ २७२ ॥

आभ्यां परस्य क्त्वाप्रत्ययस्य डित् अडुअ[1] इत्यादेशो[2] वा भवति ॥ कडुअ[3] । गडुअ । पक्षे । करिय । करिदूण । गच्छिय । गच्छिदूण ॥

दिरिचेचोः ॥ २७३ ॥

त्यादीनामाद्यत्रयस्याद्यस्येचेचौ [३.१३९] इति विहितयोरिचेचोः स्थाने दिर्भवति ॥ वेति निवृत्तम् । नेदि । देदि । भोदि । होदि ॥

अतो देश्च ॥ २७४ ॥

अकारात्परयोरिचेचोः स्थाने देश्च[4]कारात् दिश्च भवति ॥ अच्छदे । अच्छदि[5] ॥ गच्छदे । गच्छदि ॥ रमदे । रमदि ॥ किज्जदे । किज्जदि ॥ अत इति किम् । वसुआदि । नेदि[6] । भोदि ॥

भविष्यति स्सिः ॥ २७५ ॥

शौरसेन्यां भविष्यदर्थे विहिते प्रत्यये परे स्सिर्भवति ॥ हिस्साहामपवादः ॥ भविस्सिदि । करिस्सिदि । गच्छिस्सिदि ॥

अतो ङसेर्डादो-डादू ॥ २७६ ॥

अतः[7] परस्य ङसेः शौरसेन्यां आदो आदु[8] इत्यादेशौ डितौ भवतः ॥ दूरादो य्येव । दूरादु ॥

इदानीमो दाणिं ॥ २७७ ॥

शौरसेन्यामिदानीमः स्थाने दाणिमित्यादेशो भवति ॥ अनन्तरकरणीयं दाणिं आणवेदु अय्यो ॥ व्यत्ययात्प्राकृतेपि । अन्नं दाणिं बोहिं ॥

तस्मात्ताः ॥ २७८ ॥

शौरसेन्यां तस्माच्छब्दस्य ता इत्यादेशो भवति ॥ ता जाव पविसामि । ता अलं एदिणा माणेण[9] ॥

---

१ P °दुअ°. २ P °शो भ°. ३ P कदुअ । गदुअ. ४ A दे च°. ५ A °दि । रम°. ६ B नोदि. ७ B अकारात्प°. ८ A B आदू. ९ B माणेन.

**मोन्त्याण्णो वेदेतोः ॥ २७९ ॥**

शौरसेन्यामन्त्यान्मकारात्पर इदेतोः परयोर्णकारागमो वा भवति ॥ इकारे । जुत्तं णिमं जुत्तमिणं । सरिसं णिमं सरिसमिणं । एकारे । किं णेदं किमेदं । एवं णेदं एवमेदं ॥

**एवार्थे य्येव ॥ २८० ॥**

एवार्थे य्येव इति निपातः शौरसेन्यां प्रयोक्तव्यः ॥ मम य्येव बम्भणस्स । सो य्येव एसो ॥

**हञ्जे चेट्याह्वाने ॥ २८१ ॥**

शौरसेन्यां चेट्याह्वाने हञ्जे इति निपातः प्रयोक्तव्यः ॥ हञ्जे चदुरिके ॥

**हीमाणहे विस्मय-निर्वेदे ॥ २८२ ॥**

शौरसेन्यां हीमाणहे इत्ययं निपातो विस्मये निर्वेदे च प्रयोक्तव्यः ॥ विस्मये ॥ हीमाणहे जीवन्त-वश्चा मे जणणी ॥ निर्वेदे । हीमाणहे पलिस्सन्ता हगे एदेण निय-विधिणो दुव्ववसिदेण ॥

**णं नन्वर्थे ॥ २८३ ॥**

शौरसेन्यां नन्वर्थे णमिति निपातः प्रयोक्तव्यः ॥ णं अफलोदया । णं अय्यमिस्सेहिं पुढमं य्येव आणत्तं । णं भवं मे अग्गदो चलदि । आर्षे वाक्यालंकारेपि दृश्यते । नमोत्थु णं । जया णं । तया णं ॥

**अम्महे हर्षे ॥ २८४ ॥**

शौरसेन्याम् अम्महे इति निपातो हर्षे प्रयोक्तव्यः ॥ अम्महे एआए सुम्मिलाए सुपलिगढिदो भवं ॥

---

१ A °नि । जु°. २ B इजु°. ३ A °मं । सरिसमिणं. ४ B °तः प्र°. ५ B चतु°. ६ A °स्मयनि°. ७ P B दुव्वास°. ८ B आणतं.

हीही विदूषकस्य ॥ २८५ ॥

शौरसेन्यां हीही इति निपातो विदूषकाणां हर्षे द्योत्ये प्रयोक्तव्यः ॥ हीही भो संपन्ना मणोरधा पिय-वयस्सस्स ॥

शेषं प्राकृतवत् ॥ २८६ ॥

शौरसेन्यामिह प्रकरणे यत्कार्यमुक्तं ततोन्यच्छौरसेन्यां प्राकृतवदेव भवति ॥ दीर्घ-ह्रस्वौ मिथो वृत्तौ [१.४] इत्यारभ्य तो दोनादौ शौरसेन्यामयुक्तस्य [४.२६०] एतस्मात्सूत्रात्प्राग् यानि सूत्राणि एषु यान्युदाहरणानि तेषु मध्ये अमूनि तदवस्थान्येव शौरसेन्यां भवन्ति अमूनि पुनरेवंविधानि भवन्तीति विभागः प्रतिसूत्रं स्वयमभ्यूह्य दर्शनीयः ॥ यथा । अन्दावेदी । जुवदि-जणो । मणसिला । इत्यादि[1] ॥

अत एत्सौ पुंसि मागध्याम् ॥ २८७ ॥

मागध्यां भाषायां सौ परे अकारस्य[2] एकारो भवति पुंसि पुल्लिङ्गे ॥ एष मेषः । एशे मेशे ॥ एशे पुलिशे ॥ करोमि[3] भदन्त । करेमि[4] भन्ते[5] ॥ अत इति किम् । णिही । कली । गिली ॥ पुंसीति किम् । जलं ॥ यदपि "पोराणमद्ध-मागह-भासा-निययं हवइ सुत्तम्" इत्यादिनार्षस्य अर्द्धमागधभाषानियतत्वमाम्नायि वृद्धैस्तदपि प्रायोस्यैव विधानान्न वक्ष्यमाणलक्षणस्य ॥ कयरे आगच्छइ ॥ से तारिसे दुक्खसहे जिइन्दिए[6] । इत्यादि ॥

र-सोर्ल-शौ ॥ २८८ ॥

मागध्यां रेफस्य दन्त्यसकारस्य च स्थाने यथासंख्यं लकारस्तालव्यशकारश्च भवति ॥ र ॥ नले । कले ॥ स । हंशे । शुदं । शोभणं ॥ उभयोः । शालशे । पुलिशे ॥

लहश-वश-नमिल-शुल-शिल-विअलिदं[7]-मन्दाल-लायिंदंहि-युगे ।
वील-यिणे[8] पक्खालदु मम शयलमवय्य-येम्बालं[9] ॥

---

१ B °दि ॥ अथ मागधी ॥ २ A एतत्पुं°. ३ B आका°. ४ B करेमि. ५ P भदन्ते.
६ P जिएन्दि°. ७ B °विअ°. ८ B °यियं°. ९ A जंबालं.

**स-षोः संयोगे सोऽग्रीष्मे ॥ २८९ ॥**

मागध्यां सकारषकारयोः संयोगे वर्तमानयोः सो भवति ग्रीष्मशब्दे तु न भवति । ऊर्ध्वलोपाद्यपवादः ॥ स । पस्खलदि हस्ती[1] । बुहस्पदी । मस्कली । विस्मये ॥ ष । शुस्क-दालुं । कस्टं । विस्नुं । शस्प-कवले । उस्मा[2] । निस्फलं । धनुस्खण्डं ॥ अग्रीष्म इति किम् । गिम्ह-वाशले ॥

**ट्ट-ष्ठयोस्टः ॥ २९० ॥**

द्विरुक्तस्य टस्य[3] षकाराक्रान्तस्य च ठकारस्य मागध्यां सकाराक्रान्तः टकारो भवति ॥ ट्ट । पस्टे । भस्टालिका । भस्टिणी ॥ ष्ठ । शुस्टु[4] कदं । कोस्टागालं ॥

**स्थ-र्थयोस्तः ॥ २९१ ॥**

स्थ र्थ इत्येतयोः स्थाने मागध्यां सकाराक्रान्तः तो भवति[5] ॥ स्थ । उवस्तिदे । शुस्तिदे ॥ र्थ । अस्त-वदी । शस्तवाहे ॥

**ज-द्य-यां यः ॥ २९२ ॥**

मागध्यां जद्ययां स्थाने यो भवति ॥ ज । याणदि । यणवदे । अय्युणे । दुय्यणे । गय्यदि । गुण-वय्यिदे ॥ द्य । मय्यं । अय्य किल विय्याहले आगदे ॥ य । यादि । यधाशरूवं[6][7] । याण-वत्तं । यदि ॥ यस्य यत्वविधानम् आदेर्यो जः [१.२४५] इति बाधनार्थम् ॥

**न्य-ण्य-ज्ञ-ञ्जां ञ्ञः ॥ २९३ ॥**

मागध्यां न्य ण्य ज्ञ ञ्ज इत्येतेषां द्विरुक्तो ञो[8] भवति ॥ न्य । अहिमञ्ञु-कुमाले[9] । अञ्ञ-दिशं । शामञ्ञ-गुणे । कञ्ञका-वलणं[10] ॥ ण्य । पुञ्ञवन्ते[11][12] । अबम्हञ्ञं । पुञ्ञाहं । पुञ्ञं ॥ ज्ञ । पञ्ञाविशाले । शव्वञ्ञे[12][13] । अवञ्ञा ॥ ञ्ज । अञ्ञली । धणञ्ञए । पञ्ञले ॥

---

१ B °स्ती । म°. २ A उस्सा. ३ B टकारस्य. ४ B सुस्टु. ५ B °ति ॥ उ°. ६ B यथाश°. ७ A °लूवमया°. ८ B ञ्ञो°. ९ A °मञ्जकु°. १० B °काचल°. ११ B °वन्तो. १२ A सव्व.° १३ A सव्वञ्जा । अञ्ज । अञ्जली.

## व्रञ्जो[1] जः ॥ २९४ ॥

मागध्यां व्रजेर्जकारस्य ञ्जो[2] भवति । यापवादः ॥ वञ्जदि[3] ॥

## छस्य श्चोनादौ ॥ २९५[4] ॥

मागध्यामनादौ वर्तमानस्य छस्य तालव्यशकाराक्रान्तश्चो भवति ॥ गश्चे[5] गश्च । उश्चलदि । पिश्चिले । पुश्चदि ॥ लाक्षणिकस्यापि । आपन्नवत्सलः[6] । आवन्न-वश्चले ॥ तिर्यक् प्रेक्षते । तिरिच्छि पेच्छइ । तिरिश्चि[7] पेस्कदि[8] ॥ अनादाविति किम् । छाले ॥

## क्षस्य ᳵकः ॥ २९६ ॥

मागध्यामनादौ वर्तमानस्य[9] क्षस्य ᳵको जिह्वामूलीयो भवति ॥ यंᳵ[10]-के । लᳵकशे[11] ॥ अनादावित्येव । खय-यलहला । क्षयजलधरा इत्यर्थः ॥

## स्कः प्रेक्षाचक्षोः[12] ॥ २९७ ॥

मागध्यां प्रेक्षेराचक्षेश्च क्षस्य सकाराक्रान्तः को भवति ॥ जिह्वामूलीयापवादः ॥ पेस्कदि । आचस्कदि ॥

## तिष्ठश्चिष्ठः[13] ॥ २९८ ॥

मागध्यां स्थाधातोर्यस्तिष्ठ इत्यादेशस्तस्य चिष्ठ[14] इत्यादेशो भवति ॥ चिष्ठदि ॥

## अवर्णाद्वा ङसो डाहः ॥ २९९ ॥

मागध्यामवर्णात्परस्य ङसो डित् आह इत्यादेशो वा भवति ॥ हगे न एलिशाह[15] कम्माह काली । भगदत्त[16]-शोणिदाह कुम्भे । पक्षे । भीमशेणस्स[17] पश्चादो हिण्डीअदि । हिडिम्बाए घुडुक्कय[18]-शोके ण उवशमदि ॥

---

१ B व्रजेर्जः. २ B जो. ३ B वजदि. ४ B २९५ ॥ अनादौ. ५ B °श्च । उ°. ६ B °लः । आवन्नवच्छले । आ.° ७ A तिरश्चि. ८ B पेश्चदि. ९ A °स्यᳵकजि°. १० A यᳵक. ११ B °कसे. १२ B °चक्ष्योः. १३ A °श्चिट्ठः. १४ चिट्ठ°. १५ P ईदिशा°. १६ B भदन्त. १७ P °णस्स. १८ P घुडु°.

### आमो डाहँ वा ॥ ३०० ॥

मागध्यामवर्णात्परस्य आमोनुनासिकान्तो डित् आहादेशो वा भवति ॥ श-यणाहँ सुहं। पक्षे । नलिन्दाणं ॥ व्यत्ययात्प्राकृतेपि । ताहँ । तुम्हाहँ । अम्हाहँ । सरिआहँ । कम्माहँ ॥

### अहं-वयमोर्हगे ॥ ३०१ ॥

मागध्यामहंवयमोः स्थाने हगे इत्यादेशो भवति ॥ हगे शक्कावदालतित्स्त-णिवाशी धीवले । हगे शंपत्ता ॥

### शेषं शौरसेनीवत् ॥ ३०२ ॥

मागध्यां यदुक्तं ततोन्यच्छौरसेनीवद् द्रष्टव्यम् ॥ तत्र तो दोनादौ शौरसेन्यामयुक्तस्य [४.२६०] ॥ पविशदु आवुत्ते शामि-पशादाय ॥ अधः क्वचित् [४.२६१] ॥ अले किं एशे महन्दे कलयले ॥ वादेस्तावति [४.२६२] ॥ मालेध वा धलेध वा । अयं दाव शे आगमे ॥ आ आमन्त्र्ये सौ वेनो नः [४.२६३] ॥ भो कञ्चुइआ ॥ मो वा [४.२६४] ॥ भो रायं ॥ भवद्भगवतोः [४.२६५] ॥ एदु भवं शमणे भयवं महावीले । भयवं कदन्ते ये अप्पणो पञ्कं उज्झिय पलस्स पञ्कं पमाणीकलेशि ॥ न वा र्यो य्यः [४.२६६] ॥ अय्य एशे खु कुमाले मलयकेदू ॥ थो धः [४.२६७] ॥ अले कुम्भिला कधेहि ॥ इह-हचोर्हस्य [४.२६८] ॥ ओशलध अय्या ओशलध ॥ भुवो भः [४.२६९] ॥ भोदि ॥ पूर्वस्य पुरवः [४.२७०] ॥ अपुरवे ॥ क्त्व इय-दूणौ [४.२७१] ॥ किं खु शोभणे बम्हणे शित्ति कलिय लञ्ञा पलिग्गहे दिण्णे ॥ कृ-गमो डडुअः [४.२७२] ॥ कडुअ । गडुअ ॥ दिरिचेचोः [४.२७३] ॥ अमश्च-लञ्कशं पिक्खिदुं इदो य्येव आग-

---

१ P B मुहं. २ A °तिश्थ.° ३ B °वासी. ४ A °विसदु. ५ P आउत्ते. ६ A एसे. ७ B महेंदे. ८ B °वाय । यदा.° ९ A °मे ॥ आम. १० P गायं. ११ B भगवं. १२ B कयंते. १३ A पक्खं. १४ A अय्ये एसे खु. १५ B क्खु. १६ B उशालधअय्य । कुश°. १७ P अपुलवे. १८ P B इअ°. १९ P °दु°. २० P B पेक्खिदुं.

श्चदि ॥ अतोदेश्च [४.२७४] ॥ अले किं एशे महन्दे[1] कलयले शु-णीअदे ॥ भविष्यति स्सिः [४.२७५] ॥ ता कहिं नु गदे[2] लुहिलप्पिए भविस्सिदि ॥ अतो ङसेर्डादो-डादू [४.२७६] ॥ अहंपि भागुलाय-णादो मुद्दं पावेमि[3] ॥ इदानीमो दाणिं [४.२७७] ॥ शुणध दाणिं हगे शक्कावयाल-तित्थ[4]-णिवाशी धीवले ॥ तस्मात्ताः [४.२७८] ॥ ता याव पविशामि ॥ मोन्त्याण्णो वेदेतोः [४.२७९] ॥ युत्तं णिमं । शालिशं णिमं ॥ एवार्थे य्येव [४.२८०] ॥ मम य्येव ॥ हञ्जे चेट्या-ह्वाने [४.२८१] ॥ हञ्जे चदुलिके[6] ॥ हीमाणहे विस्मय-निर्वेदे [४.२८२] ॥ विस्मये । यथा उदात्तराघवे । राक्षसः । हीमाणहे जी-वन्त-वश्चा मे जणणी ॥ निर्वेदे ॥ यथा विक्रान्तभीमे । राक्षसः । ही-माणहे पलिस्सन्ता हगे एदेण निय-विधिणो दुव्ववशिदेण[7] ॥ णं न-न्वर्थे [४.२८३] ॥ णं अवशलोपशप्पणीया[8][9] लायाणो ॥ अम्महे हर्षे [४.२८४] ॥ अम्महे एआए शुम्मिलाए शुपलिगढिदे भवं ॥ हीही विदूषकस्य [४.२८५] ॥ हीही संपन्ना[10] मे मणोलधा पियवयस्सस्स ॥ शेषं प्राकृतवत् [४.२८६] ॥ मागध्यामपि दीर्घ-ह्रस्वौ मिथो वृत्तौ [१.४] इत्यारभ्य तो दोनादौ शौरसेन्यामयुक्तस्य [४.२६०] इत्य-स्मात्प्राग् यानि सूत्राणि तेषु यान्युदाहरणानि सन्ति तेषु मध्ये अमूनि तदवस्थान्येव मागध्याममूनि पुनरेवंविधानि भवन्तीति विभागः स्व-यमभ्यूह्य दर्शनीयः[11] ॥

ज्ञो ञ्ञः पैशाच्याम् ॥ ३०३ ॥

पैशाच्यां भाषायां ज्ञस्य स्थाने ञ्ञो भवति[12] ॥ पञ्ञा । सञ्ञा । सव्व-ञ्ञो । ञ्ञानं[13][14] । विञ्ञानं ॥

---

१ B महेंद. २ P गडे. ३ B °वेमि. ४ P °वदाल°. ५ A °तित्थ°. ६ P चडुलिके. ७ A °व्ववशिदे°. ८ P °लोवशप्प°. ९ A °सप्पिणी°. १० A °न्ना म°. ११ B °यः ॥ अथ पैशाची ॥ ज्ञो°. १२ B °ति । स°. १३ P ज्ञानं. १४ A °नं ॥ रा°.

**राज्ञो वा चिञ्[1] ॥ ३०४ ॥**

पैशाच्यां राज्ञ इति शब्दे यो ज्ञकारस्तस्य चिञ्[2] आदेशो वा भवति ॥ राचिञा लपितं । रञ्ञा लपितं । राचिञो धनं । रञ्ञो धनं । ज्ञ इत्येव । राजा[3] ॥

**न्य-ण्योर्ञ्ञः[4] ॥ ३०५ ॥**

पैशाच्यां न्यण्योः स्थाने ञ्ञो भवति ॥ कञ्ञका । अभिमञ्ञू । पुञ्ञ-कम्मो । पुञ्ञाहं[5] ॥

**णो नः ॥ ३०६ ॥**

पैशाच्यां णकारस्य नो भवति ॥ गुन-गन-युत्तो[6] । गुनेन ॥

**तदोस्तः[7] ॥ ३०७ ॥**

पैशाच्यां तकारदकारयोस्तो भवति ॥ तस्य । भगवती । पव्वती[8] । सतं ॥ दस्य । मतन-परवसो । सतनं । तामोतरो । पतेसो । वतनकं । होतु । रमतु[9] ॥ तकारस्यापि तकारविधानमादेशान्तरबाधनार्थम् । तेन पताका वेतिसो[10] इत्याद्यपि सिद्धं भवति ॥

**लो ळः[11] ॥ ३०८ ॥**

पैशाच्यां लकारस्य ळकारो[12] भवति ॥ सीळं[13]। कुळं[13]। जळं[13]। सळिळं[14] । कमळं[13] ॥

**श-षोः सः ॥ ३०९ ॥**

पैशाच्यां शषोः सो भवति ॥ श । सोभति । सोभनं । ससी । सक्को । सङ्खो ॥ ष । विसमो । किसानो[15] ॥ न कगचजादिषट्शम्यन्तसूत्रोक्तम् [४.३२४] इत्यस्य बाधकस्य बाधनार्थोयं योगः ॥

---

१ B चिञः. २ B चिञ. ३ B राया. ४ A °ण्योर्ञः. ५ A पुञाहं. ६ P ञुत्तो. B युत्तो. ७ B °स्त: पैशाच्यां ॥ ६ ॥ न.° ८ A पव्वनी. ९ P °तु । तुमातो । तुमातु । ममातो । ममातु । त°. १० P B वेतसो. ११ B °ळः पैशाच्यां ॥ ७ ॥ ळ°. १२ A ळो. B लकारो. १३ °ळं. १४ सलिलं. १५ P विसानो.

**हृदये यस्य पः ॥ ३१० ॥**

पैशाच्यां हृदयशब्दे यस्य पो भवति ॥ हितपकं । किंपि किंपि हितपके अत्थं चिन्तयमानी ॥

**टोस्तुर्वा ॥ ३११ ॥**

पैशाच्यां टोः स्थाने तुर्वा भवति ॥ कुतुम्बकं । कुटुम्बकं ॥

**क्त्वस्तूनः ॥ ३१२ ॥**

पैशाच्यां क्त्वाप्रत्ययस्य स्थाने तून इत्यादेशो भवति ॥ गन्तून । रन्तून । हसितून । पठितून[1] । कधितून ॥

**द्धून-त्थूनौ ष्ट्वः ॥ ३१३ ॥**

पैशाच्यां ष्ट्वा इत्यस्य स्थाने द्धून त्थून इत्यादेशौ भवतः । पूर्वस्यापवादः ॥ नद्धून[2] । नत्थून । तद्धून । तत्थून ॥

**र्य-स्न-ष्टां रिय-सिन-सटाः क्वचित्[3] ॥ ३१४ ॥**

पैशाच्यां र्यस्नष्टां स्थाने यथासंख्यं रिय सिन सट इत्यादेशाः क्वचिद् भवन्ति ॥ भार्या । भारिया ॥ स्नातम् । सिनातं ॥ कष्टम् । कसटं[4] ॥ क्वचिदिति किम्[5] । सुज्जो । सुनुसा । तिट्ठो ॥

**क्यस्येय्यः ॥ ३१५ ॥**

पैशाच्यां क्यप्रत्ययस्य इय्य इत्यादेशो भवति ॥ गिय्यते । दिय्यते । रमिय्यते । पठिय्यते[6] ॥

**कृगो डीरः ॥ ३१६ ॥**

पैशाच्यां कृगः परस्य[7] क्यस्य स्थाने डीर इत्यादेशो भवति ॥ पुधुमतंसने सव्वस्स य्येव सम्मानं कीरते ॥

---

१ P पढितून. २ P द्धून. ३ B ष्ट्वः ॥ १२ ॥ ष्ट्वा. ४ P °सता:. ५ A B किम् । सुनु°. ६ P B पढिय्यते. ७ A °स्य स्था°.

**यादृशादेर्दुस्तिः ॥ ३१७ ॥**

पैशाच्यां यादृश इत्येवमादीनां दृ इत्यस्य स्थाने तिः इत्यादेशो भवति ॥ यातिसो । तातिसो । केतिसो । एतिसो । भवातिसो । अञ्ञातिसो । युम्हातिसो । अम्हातिसो ॥

**इचेचः ॥ ३१८ ॥**

पैशाच्यामिचेचोः स्थाने तिरादेशो भवति ॥ वसुआति । भोति । नेति । तेति ॥

**आत्तेश्च ॥ ३१९ ॥**

पैशाच्यामकारात्परयोः इचेचोः स्थाने तेश्चकारात् तिश्चादेशो भवति ॥ लपते । लपति । अच्छते । अच्छति । गच्छते । गच्छति । रमते । रमति ॥ आदिति किम् । होति । नेति ॥

**भविष्यत्येय्य एव ॥ ३२० ॥**

पैशाच्यामिचेचोः स्थाने भविष्यति एय्य एव भवति न तु स्सिः ॥ तं तद्धून चिंतितं रञ्ञा का एसा हुवेय्य ॥

**अतो ङसेर्डातो-डातू ॥ ३२१ ॥**

पैशाच्यामकारात्परस्य ङसेर्डितौ आतो आतु इत्यादेशौ भवतः ॥ ताव च तीए दूरातो य्येव तिट्ठो । तूरातु । तुमातो । तुमातु । ममातो । ममातु ॥

**तदिदमोष्टा नेन स्त्रियां तु नाए ॥ ३२२ ॥**

पैशाच्यां तदिदमोः स्थाने टाप्रत्ययेन सह नेन इत्यादेशो भवति । स्त्रीलिङ्गे तु नाए इत्यादेशो भवति ॥ तत्थ च नेन कत-सिनानेन ॥ स्त्रियाम् । पूजितो च नाए पातग्ग-कुसुम-प्पतानेन ॥ टेति किम् । एवं चिन्तयन्तो गतो सो ताए समीपं ॥

---

१ P B तिरादे°. २ P °सो । ए°. ३ P °सो । अ°. ४ B उम्हा°. Dhundhika here reads तुम्हा°, in accordance with I. 246. ५ A B ने चका°. ६ P तद्धून. ७ B व. ८ P तूरातो. ९ B दूरातु. १० P नेन । कतसिन । नेन. ११ A चिन्तय. १२ A तीए. १३ B समीवे.

**शेषं शौरसेनीवत् ॥ ३२३ ॥**

पैशाच्यां यदुक्तं ततोन्यच्छेषं पैशाच्यां शौरसेनीवद् भवति ॥ अध ससरीरो भगव मकर[1]-धजो । एत्थ परिब्भमन्तो हुवेय्य । एवंविधाए भगवतीए कधं तापस-वेस-गहनं कतं ॥ एतिसं अतिट्ठ-पुरवं महा-धनं तद्धून[2] । भगवं यदि[3] मं वरं पयच्छसि[4] राजं[5] च दाव लोकं[6] । तावं च तीए दूरातोय्येव तिट्ठो सो आगच्छमानो राजा ॥

**न क-ग-च-जादि-षट्-शम्यन्त-सूत्रोक्तम् ॥ ३२४ ॥**

पैशाच्यां क-ग-च-ज-त-द-प-य-वां प्रायो लुक् [१.१७७] इत्यारभ्य षट्-शमी-शाव-सुधा-सप्तपर्णेष्वादेश्छः [१.२६५] इति यावद्यानि सूत्राणि तैर्यदुक्तं कार्यं तन्न भवति ॥ मकरकेतू । सगर-पुत्त-वचनं । विजयसेनेन लपितं । मतनं । पापं । आयुधं । तेवरो ॥ एवमन्यसूत्राणामप्युदाहरणानि द्रष्टव्यानि ॥

**चूलिका-पैशाचिके तृतीय-तुर्ययोराद्य-द्वितीयौ ॥ ३२५ ॥**

चूलिकापैशाचिके वर्गाणां तृतीयतुर्ययोः स्थाने यथासंख्यमाद्यद्वितीयौ भवतः ॥ नगरम् । नकरं ॥ मार्गणः । मक्कनो ॥ गिरि-तटम् । किरि-तटं ॥ मेघः । मखो ॥ व्याघ्रः । वक्खो ॥ घर्मः । खम्मो ॥ राजा । राचा ॥ जर्जरम् । चच्चरं ॥ जीमूतः । चीमूतो ॥ निर्झरः । निच्छरो ॥ झर्झरः । छच्छरो ॥ तडागम् । तटाकं ॥ मण्डलम् । मण्टलं ॥ डमरुकः । टमरुको ॥ गाढम । काठं ॥ षण्ढः । सण्ठो ॥ ढक्का । ठक्का ॥ मदनः । मतनो ॥ कन्दर्पः । कन्तप्पो ॥ दामोदरः । तामोतरो ॥ मधुरम् । मथुरं ॥ बान्धवः । पन्थवो ॥ धूली । थूली ॥ बालकः । पालको ॥ रभसः । रफसो ॥ रम्भा । रम्फा ॥ भगवती । फकवती ॥ नियोजितम । नियोचितं ॥ क्वचिल्लाक्षणिकस्यापि । पडिमा इत्यस्य स्थाने पटिमा । दाढा इत्यस्य स्थाने ताठा ॥

---

१ P °रद्धओ. B °रध्वओ. २ P तद्धून. ३ P यति ४ P °यच्छसे. B °यथ्थसं. ५ B रायं. ६ P लोके. ७ B °य ती°. ८ P तुग. ९ B अग°. १० B राआ ॥ अथ चूलिका-पैशाची ॥ न°. ११ B थ. १२ A पतनं. १३ A चौलिका. १४ A मार्गनगः. १५ B राचा. १६ A छर्छरो. १७ B तटागं. १८ B पन्धवो. १९ A °सो । भग°. २० B पढिमा.

**रस्य लो वा ॥ ३२६ ॥**

चूलिकापैशाचिके रस्य स्थाने लो वा भवति ॥

पनमथ पनयं-पकुप्पित-गोली-चलनग्ग-लग्ग-पति-बिम्बं ।
तससु नख-तप्पनेसुं एकातस-तनु-थलं लुद्दं ॥
नच्चन्तस्स य लीला-पातुक्खेवेन कम्पिता वसुधा ।
उच्छल्लन्ति समुद्दा सइला निपतन्ति तं हलं नमथ ॥

**नादि-युज्योरन्येषाम् ॥ ३२७ ॥**

चूलिकापैशाचिकेपि अन्येषामाचार्याणां मतेन तृतीयतुर्ययोरादौ वर्तमानयोर्युजिधातौ च आद्यद्वितीयौ न भवतः ॥ गतिः । गती ॥ घर्मः । घम्मो ॥ जीमूतः । जीमूतो ॥ झर्झरः । झच्छरो ॥ डमरुकः । डमरुको ॥ ढक्का । ढक्का ॥ दामोदरः । दामोतरो ॥ बालकः । बालको ॥ भगवती । भकवती ॥ नियोजितम् । नियोजितं ॥

**शेषं प्राग्वत् ॥ ३२८ ॥**

चूलिकापैशाचिके तृतीयतुर्ययोरित्यादि यदुक्तं ततोन्यच्छेषं प्राक्तनपैशाचिकवद् भवति ॥ नकरं । मक्कनो । अनयोर्नो णत्वं न भवति ॥ णस्य च नत्वं स्यात् । एवमन्यदपि ॥

**स्वराणां स्वराः प्रायोपभ्रंशे ॥ ३२९ ॥**

अपभ्रंशे स्वराणां स्थाने प्रायः स्वरा भवन्ति ॥ कच्चु । काच्च ॥ वेण । वीणा ॥ बाह । बाहा । बाहु ॥ पट्ठि । पिट्ठि । पुट्ठि ॥ तणु । तिणु । तृणु ॥ सुकिदु । सुकिओ । सुकृदु ॥ किन्नओ । किलिन्नओ ॥ लिह । लीह । लेह ॥ गउरि । गोरि ॥ प्रायोग्रहणाद्यस्यापभ्रंशे विशेषो वक्ष्यते तस्यापि क्वचित्प्राकृतवत् शौरसेनीवच्च कार्यं भवति ॥

---

१ B °यपकु°. २ B °नग्गपडवि°. ३ P थलं. ४ B लुद्धं. ५ B °नस्य. ६ B वसुधा. ७ B उच्छलंति. ८ A °क्का । दामोतरो. ९ B दामोदरो. १० B भगवती. ११ A नियोचितं. १२ A °क्तनं पै°. १३ B मक्करो. १४ B °त्वं च न. १५ B तु. १६ B °पि ॥ अथ अपभ्रंशभाषा ॥ स्वरा°. १७ A वीणा. १८ A सुकिउ. १९ B वक्ष्यति.

## स्यादौ दीर्घ-ह्रस्वौ ॥ ३३० ॥

अपभ्रंशे नाम्नोन्त्यस्वरस्य दीर्घह्रस्वौ स्यादौ प्रायो भवतः ॥ सौ ॥

ढोल्ला सामला धण चम्पा-वण्णी ।
[1]णाइ सुवण्ण-रेह कस-वट्टइ दिण्णी ॥

आमन्त्र्ये ।

ढोल्ला मइं[2] तुहुं वारिया[3] मा कुरु[4] दीहा माणु ।
निद्दए गमिही रत्तडी दडवड होइ विहाणु ॥

स्त्रियाम् ॥

बिट्टीए मइ भणिय तुहुं[5] मा करु वङ्की[6] दिट्ठि ।
पुत्ति सकण्णी[7] भल्लि जिवँ[8] मारइ हिअइ[9] पइट्ठि ॥

जसि ॥

एइ ति घोडा एह थलि एइ ति निसिआ खग्ग ।
एत्थु[10] मुणीसिम जाणीअइ[11] जो नवि वालइ वग्ग ॥

एवं विभक्त्यन्तरेष्वप्युदाहार्यम् ॥

## स्यमोरस्योत् ॥ ३३१ ॥

अपभ्रंशे अकारस्य स्यमोः परयोः उकारो भवति ॥

दहमुहु[12] भुवण-भयंकरु तोसिअ-संकरु णिग्गउ रहे-वरि[13] चडिअउ ।
चउमुहु[12] छंमुहु[12] झाइवि एक्कहिं लाइवि णावइ दइवें घडिअउ ॥

## सौ पुंस्योद्वा ॥ ३३२ ॥

अपभ्रंशे पुल्लिङ्गे वर्तमानस्य नाम्नोकारस्य सौ परे ओकारो[14] वा भवति ॥

अगलिअ-नेह-निवट्टाहं जोअण-लक्खुवि जाउ[15] ।
वरिस-सएणवि जो मिलइ सहि सोक्खहं सो ठाउ[16] ॥

पुंसीति किम् ।

---

१ P नाइ. २ P मइ. B मइ. ३ P B वारिओ. ४ B करु. ५ P तुह. B तुहं. ६ B वंकिदिट्ठी. ७ B °कण्णिम°. ८ A जिव. B जिम. ९ A हिअय. B हीअइ. १० B एत्थ. ११ P जाणिअइ. १२ B °हु. १३ B रहेवडिं च°. १४ A B °रो भ°. १५ A जाओ. १६ B ट्ठाउ. A ठाओ.

अङ्गहिं अङ्गु न मिलिउ[1] हलि[2] अहरें[3] अहरु न पत्तु ।
पिअ जोअन्तिहे मुह-कमलु एम्वइ सुरउ समत्तु ॥

एट्टि ॥ ३३३ ॥

अपभ्रंशे अकारस्य टायामेकारो भवति ॥
जे महु दिण्णा[4] दिअहडा दइएं[5] पवसन्तेण ।
ताणं[6] गणन्तिए[7] अङ्गुलिउ जज्जरिआउ नहेण ॥

ङिनेच्च ॥ ३३४ ॥

अपभ्रंशे अकारस्य ङिना सह इकार एकारश्च भवतः[8] ॥
सायरु[9] उप्परि[10] तणु धरइ तलि घल्लइ रयणाइं ।
सामि सुभिच्चुवि परिहरइ सम्माणेइ खलाइं ॥
तले घल्लइ ॥

भिस्येद्वा ॥ ३३५ ॥

अपभ्रंशे अकारस्य भिसि परे एकारो[11] वा भवति ॥
गुणहिं[12] न संपइ[13] कित्ति पर[14] फल लिहिआ भुञ्जन्ति ।
केसरि न लहइ बोड्डिअवि गय लक्खेहिं घेप्पन्ति ॥

ङसेर्हे-हू[15] ॥ ३३६ ॥

अस्येति पञ्चम्यन्तं विपरिणम्यते । अपभ्रंशे अकारात्परस्य ङसेर्हे हु[16] इत्यादेशौ[17] भवतः ॥
वच्छहे गृण्हइ[18] फलइं जणु कडु-पल्लव वज्जेइ ॥
तोवि महद्दुमु सुअणु जिवँ[19] ते उच्छङ्गि[20] धरेइ ॥
वच्छहु[21] गृण्हइ ॥

---

१ P मिलिअउ. २ A हले. ३ B अहरे. ४ A दिन्ना. ५ A B दइए. ६ B ताणं. ७ A गणंतिअ. ८ A भवति. ९ B सायर. १० B उपरि. ११ B °रो भ°. १२ B गुणेहिं. १३ P संपय. १४ B परं. १५ A °र्हेहु:. १६ A °र्हेंहू. १७ B °शौ वा भ°. १८ A गृन्हइ. १९ A B जिम्व. २० P उच्छङ्गे. २१ B वच्छहू.

**भ्यसो हुं ॥ ३३७ ॥**

अपभ्रंशे अकारात्परस्य भ्यसः पञ्चमीबहुवचनस्य हुं इत्यादेशो भवति ॥

दूरुड्डाणें पडिउ खलु अप्पणु जणु मारेइ[1]।
जिहँ[2] गिरि-सिङ्गहुँ पडिअ सिल अन्नुवि[3] चूरु करेइ ॥

**ङसः सु-हो-स्सवः ॥ ३३८ ॥**

अपभ्रंशे अकारात्परस्य ङसः स्थाने सु हो स्सु इति त्रय आदेशा भवन्ति ॥

जो गुण गोवइ अप्पणा पयँडा[4] करइ परस्सु ।
तसु हउं कलि-जुगि[5] दुल्लहहो बलि किज्जउं सुअणस्सु ॥

**आमो हं ॥ ३३९ ॥**

अपभ्रंशे अकारात्परस्यामो हमित्यादेशो भवति ॥

तणहं तइज्जी भङ्गि नवि तें[6] अवड-यडि वसन्ति ।
अह जणु लग्गिवि[7] उत्तरइ अह सह[8] सइं मज्जन्ति ॥

**हुं चेदुद्भ्याम् ॥ ३४० ॥**

अपभ्रंशे इकारोकाराभ्यां परस्यामो हुं हं चादेशौ[9][10] भवतः ॥

दइवु घडावइ वणि तरुहुं सउणिहं[11] पक्क फलाइं ।
सो वरि सुक्खु पइट्ठ णवि कण्णहिं खल-वयणाइं ॥

प्रायोधिकारात् क्वचित्सुपोपि हुं ।

धवलु विसूरइ सामिअहो[12] गरुआ भरु[13] पिक्खेवि ।
हउं[14] कि न जुत्तउ दुहुं दिसिहिं खण्डइं दोण्णि करेवि ॥

---

१ B मारइ. २ P जिहं. B जिहिं. ३ B अन्नवि. ४ A पइडा. ५ B °लियुगि. ६ B ते. ७ B भग्गिवि. ८ B सहि. ९ B वेदु°. १० B चादे°. ११ B सणिहं. १२ B °होमिअहोग°. १३ B भरपेक्खे°. १४ B हुं कि.

### ङसि-भ्यस्-ङीनां हे-हुं-हयः ॥ ३४१ ॥

अपभ्रंशे इदुद्भ्यां परेषां ङसि भ्यस् ङि इत्येतेषां यथासंख्यं हे हुं हि इत्येते त्रय आदेशा भवन्ति ॥ ङसेर्हे ।

गिरिहे सिलायलु तरुहे फलु घेप्पइ नीसावँन्नु[1] ।
घरु मेल्लेप्पिणु[2] माणुसहं तोवि न रुच्चइ रन्नु[3] ॥

भ्यसो हुं ।

तरुहुंवि वक्कलु फलु मुणिवि परिहणु असणु लहन्ति ।
सामिहुं एत्तिउ अग्गलउं[4] आयरु भिच्चु गृह्णन्ति ॥

ङेर्हि । अह विरल-पहाउ जि कलिहि धम्मु ॥

### आट्टो णानुस्वारौ ॥ ३४२ ॥

अपभ्रंशे अकारात्परस्य टावचनस्य णानुस्वारावादेशौ[5] भवतः ॥ दइएं पवसन्तेण ॥

### एं[6] चेदुतः ॥ ३४३ ॥

अपभ्रंशे इकारोकाराभ्यां परस्य टावचनस्य एं चकारात् णानुस्वारौ च भवन्ति ॥ एं ।

अग्गिएं उण्हउ होइ जगु वाएं[7] सीअलु तेवँ[8] ।
जो पुणु[9] अग्गिं सीअला तसु उण्हत्तणु केवँ[10] ॥

णानुस्वारौ ।

विप्पिअ-आरउ जइवि पिउ तोवि तं आणहि[11] अज्जु[12] ।
अग्गिण दड्ढा जइवि घरु तो तें अग्गिं कज्जु ॥

एवमुकारादप्युदाहार्याः ॥

---

१ A B °सावन्नु. २ B मेल्लप्पिणु. ३ B रण्णु. ४ P B °लउ. ५ B °शौ वा भ°. ६ B एँ. ७ A वाउएं. ८ A B तेम्व. ९ B पुण. १० A B केम्व. ११ A आणहिं. १२ B अज्जु.

**स्यम्-जस्-शसां लुक् ॥ ३४४ ॥**

अपभ्रंशे सि अम् जस् शस् इत्येतेषां लोपो भवति ॥ एइ ति[1] घोडा एह थलि । इत्यादि । अत्र स्यम्जसां लोपः ॥

जिवँ जिवँ[2] वंकिम लोअणहं णिरु[3] सामलि[4] सिक्खेइ ।

तिवँ तिवँ[5] वम्महु निअय-सरु[6] खर-पत्थरि तिक्खेइ ॥

अत्र स्यम्शसां लोपः ॥

**षष्ठ्याः ॥ ३४५ ॥**

अपभ्रंशे षष्ठ्या विभक्त्याः[7] प्रायो लुग् भवति ॥

संगर-सएहिं[8] जु वण्णिअइ[9] देक्खु अम्हारा कन्तु ।

अइमत्तहं चत्तङ्कुसहं गय कुम्भइं[10] दारन्तु ॥

पृथग्योगो लक्ष्यानुसारार्थः ॥

**आमन्त्र्ये जसो होः ॥ ३४६ ॥**

अपभ्रंशे आमन्त्र्येर्थे वर्तमानान्नाम्नः परस्य जसो हो इत्यादेशो भवति । लोपापवादः ॥

तरुणहो तरुणिहो मुणिउ[11] मइं करहु[12] मं अप्पहो घाउ ॥

**भिस्सुपोर्हि[13] ॥ ३४७ ॥**

अपभ्रंशे भिस्सुपोः स्थाने हिं इत्यादेशो भवति ॥ गुणहिं[14] न संपइ कित्ति पर ॥ सुप् । भाईरहि जिवँ[15] भारइ मग्गेहिं तिहिंवि पयट्टइ ॥

**स्त्रियां जस्-शसोरुदोत् ॥ ३४८ ॥**

अपभ्रंशे स्त्रियां वर्तमानान्नाम्नः परस्य जसः शसश्च प्रत्येकमुदोतावादेशौ भवतः । लोपापवादौ[16] ॥ जसः । अंगुलिउँ[17] जज्जरियाओ[18] नहेण ॥ शसः । सुन्दर-सव्वङ्गाउ[19] विलासिणीओ पेच्छन्ताण[20] ॥ वचनभेदान्न यथासंख्यम् ॥

---

१ B ते. २ A B जिम्वजिम्व. ३ A निरु. ४ B साम्वलि. ५ A B तिम्वतिम्व. ६ B सर. ७ P °भक्तेः. ८ P सआहिं. ९ A वन्नि°. १० A कुंभइ. B कुंभय. ११ P B मइ. १२ B मप्पहो. १३ A °पोर्हिं. १४ B गुणेहिं. १५ A B जिम्व. १६ P °वादः. १७ B °लीउ. १८ P B °रिआउ. १९ P B °गाओ. २० P °णीउ.

टए ॥ ३४९ ॥

अपभ्रंशे स्त्रियां वर्तमानान्नाम्नः परस्याष्टायाः स्थाने ए इत्यादेशो भवति ॥

निअ-मुह-करहिंवि मुद्ध कर अन्धारइ पडिपेक्खइ ।
ससि-मण्डल-चन्दिमए पुणु काइं न दूरे देक्खइ ॥

जहिं मरगय-कन्तिए संवलिअं ॥

ङस्-ङस्योर्हे ॥ ३५० ॥

अपभ्रंशे स्त्रियां वर्तमानान्नाम्नः परयोर्ङस् ङसि इत्येतयोर्हे इत्यादेशो भवति ॥ ङसः ।

तुच्छ-मज्झहे तुच्छ-जम्पिरहे ।
तुच्छच्छ-रोमावलिहे तुच्छ-राय तुच्छयर-हासहे ।
पिय-वयणु अलहन्तिअहे तुच्छकाय-वम्मह-निवासहे ॥
अन्नु जु तुच्छउं तहे धणहे तं अक्खणह न जाइ ।
कटरि थणंतरु मुद्धडहे जें मणु विच्चि ण माइ ॥

ङसेः ।

फोडेन्ति जे हियडउं अप्पणउं ताहं पराइ कवण घृण ।
रक्खेज्जहु लोअहो अप्पणा बालहे जाया विसम थण ॥

भ्यसामोर्हुः ॥ ३५१ ॥

अपभ्रंशे स्त्रियां वर्तमानान्नाम्नः परस्य भ्यस आमश्च हु इत्यादेशो भवति ॥

भल्ला हुआ जु मारिआ बहिणि महारा कन्तु ।
लज्जेज्जं तु वयंसिअहु जइ भग्गा घरु एन्तु ॥

वयस्याभ्यो वयास्यानां वेत्यर्थः ॥

१ A °स्यटायाः. २ B मुकरहिं. ३ B मुद्ध. A मुद्द. ४ P किर. ५ A दूरं. B दूरे. ६ B °गयं कंति°. ७ B °हंहिअ°. ८ B थणहे. ९ P णउं. १० A B घणं°. ११ B मुद्धडहे. १२ A जे. B जं. १३ P B न माइ. १४ B फोडंति. १५ A जि. १६ B हिंअ°. १७ A घृण. B घण. P घण ॥ भ्यसा°. १८ P तहणहो. १९ B थण. २० A चेत्य°.

### ङेर्हि[1] ॥ ३५२ ॥

अपभ्रंशे स्त्रियां वर्तमानान्नाम्नः परस्य ङेः सप्तम्येकवचनस्य हि[2] इत्यादेशो भवति ॥

वायसु उड्डावन्तिअए पिउ दिट्ठउ सहसत्ति[3] ।
अद्धा वलया महिहि[4] गय अद्धा फुट्ट तडत्ति[5] ॥

### क्लीबे जस्-शसोरिं[6] ॥ ३५३ ॥

अपभ्रंशे क्लीबे वर्तमानान्नाम्नः परयोर्जस्-शसोः इं इत्यादेशो भवति ॥

कमलइं मेल्लवि अलि-उलइं करि-गण्डाइं महन्ति ।
असुलहमेच्छण[7] जाहं भलि ते णवि दूर[8] गणन्ति ॥

### कान्तस्यात उं स्यमोः ॥ ३५४ ॥

अपभ्रंशे क्लीबे वर्तमानस्य ककारान्तस्य नाम्नो योकारस्तस्य स्यमोः परयोः उं इत्यादेशो भवति ॥ अन्नु जु तुच्छउं तहे धणहे ॥

भग्गउं देक्खिवि[9] निअय बलु[10] बलु पसरिअउं[11] परस्सु ।
उम्मिल्लइ ससि-रेह[12] जिवँ[13] करि करवालु[14] पियस्सु[15] ॥

### सर्वादेर्ङसेर्हां ॥ ३५५ ॥

अपभ्रंशे सर्वादेरकारान्तात्परस्य ङसेर्हां इत्यादेशो भवति ॥ जहां होन्तउ[16] आगदो । तहां होन्तउ[16] आगदो । कहां होन्तउ[16] आगदो ॥

### किमो डिहे[17] वा ॥ ३५६ ॥

अपभ्रंशे किमोकारान्तात्[18]परस्य ङसेर्डिहे[17] इत्यादेशो[19] वा भवति ॥

जइ तहो तुट्टउ नेहडा मइं सहुं[20] नवि तिल-तार[21] ।
तं किहे[22] वङ्केहिं[23] लोअणेहिं[24] जोइज्जउं सय-वार[25] ॥

---

१ A ङेर्हिं. २ A हिं. ३ B °सन्ति. ४ A महिहिं. ५ B तडुन्ति. ६ B °रिं ॥५३॥ क्ली°. ७ B °मेत्थण. ८ B दूरे. ९ B देक्खवि १० B बलुप°. ११ B पस्सरिउं परस्स । १२ A °हामिजि° १३ A B जिम्व. १४ B °वाल. १५ B °यस्स. १६ B होतउ. १७ B हिहे. १८ B °कारात्प°. १९ B °देशा वा भवन्ति. २० A सहु. B सह. २१ P तारु. २२ B किहि. २३ P वङ्कहि. २४ B °अणिहिं. २५ P वारु.

**ङेर्हिं ॥ ३५७ ॥**

अपभ्रंशे सर्वादेरकारान्तात्[1]परस्य ङेः सप्तम्येकवचनस्य हिं इत्यादेशो भवति ॥

जहिं कप्पिज्जइ सरिं[2] सरु छिज्जइ खग्गिण[3] खग्गु ।
तहिं तेहइ भड-घड-निवहि[4] कन्तु पयासइ मग्गु ॥
एक्कहिं अक्खिहिं[5] सावणु अन्नहिं भद्दवउ[6] ।
माहउ महिअल-सत्थरि गण्ड-त्थले सरउ ॥
अङ्गिहिं[7] गिम्ह सुहच्छी-तिल-[8]वणि[9] मग्गसिरु ।
तहे[10] मुद्धहे[11] मुह-पङ्कइ आवासिउ सिसिरु ॥
हिअडा फुट्टि तडत्ति[12] करि कालक्खेवें[13] काइं ।
देक्खउं[14] हय-विहि कहिं ठवइ पइं विणु[15] दुक्ख-सयाइं ॥

**यत्तत्किंभ्यो ङसो डासुर्न वा ॥ ३५८ ॥**

अपभ्रंशे यत्तत्किम् इत्येतेभ्योकारान्तेभ्यः परस्य ङसो डासु इत्यादेशो वा भवति ॥

कन्तु महारउ हलि सहिए निच्छइं[16] रूसइ जासु ।
अत्थिहिं[17] सत्थिहिं[18] हत्थिहिंवि[19] ठाउवि फेडइ[20] तासु ॥
जीविउ कासु न वल्लहउं धणु पुणु[21] कासु न इट्ठु ।
दोण्णिवि[22] अवसरें[23]-निवडिआइं[24][25] तिण-सम[26] गणइ[27] विसिट्ठु ॥

**स्त्रियां[28] डहे ॥ ३५९ ॥**

अपभ्रंशे [29]स्त्रीलिङ्गे वर्तमानेभ्यो यत्तत्किंभ्यः परस्य ङसो डहे इत्यादेशो वा भवति ॥ जहे केरउ । तहे केरउं । कहे केरउ ॥

---

१ B °कारान्प°. २ P सरें. B सरेण. ३ P खग्गें. B खग्गेण. ४ P णिवहि. ५ A अंखिहिं. ६ B °ओ. ७ P अङ्गहि गिम्हु. ८ B सुहत्थीति°. ९ B वहिणि. १० P तहि. ११ B मुद्धमु°. १२ A तडिन्नि. १३ B °क्खेवें. १४ B देक्खं ह. १५ B विदुणुक्ख. १६ B तिच्छएँ. १७ P अत्थ°. B अत्थे°. १८ P सत्थ°. B सत्थे°. १९ P हत्थ°. B हत्थे°. २० B °डइइ. २१ B पुण. २२ B दोन्निवि. २३ B °सरि. २४ A °रवडिआइं. २५ P °डिअइं. २६ P सवँ. २७ B गणइं. २८ A स्त्रियां व°. २९ B °ङ ॥ य°.

**यत्तदः स्यमोर्ध्रुं त्रं ॥ ३६० ॥**

अपभ्रंशे यत्तदोः स्थाने स्यमोः परयोर्यथासंख्यं ध्रुं त्रं इत्यादेशौ वा भवतः ॥

प्रङ्गणि चिट्ठदि नाहु[1] ध्रुं त्रं रणि करदि न भ्रन्त्रि[2] ॥

पक्षे । तं बोल्लिअइ[3] जु निव्वहइ ॥

**इदम इमुः क्लीबे ॥ ३६१ ॥**

अपभ्रंशे नपुंसकलिङ्गे वर्तमानस्येदमः स्यमोः परयोः इमु इत्यादेशो भवति ॥ इमु कुलु तुह तणउं । इमु कुलु देक्खु ॥

**एतदः स्त्री-पुं-क्लीबे एह एहो एहु ॥ ३६२ ॥**

अपभ्रंशे स्त्रियां पुंसि नपुंसके[4] वर्तमानस्यैतदः स्थाने स्यमोः परयोर्यथासंख्यम् एह एहो एहु इत्यादेशा[5] भवन्ति ॥

एह कुमारी एहो नरु एहु मणोरह-ठाणु[6] ।
एहउं वढ चिन्तन्ताहं पच्छइ होइ विहाणुं[7] ॥

**एइर्जस्-शसोः ॥ ३६३ ॥**

अपभ्रंशे एतदो जस्-शसोः परयोः एइ इत्यादेशो भवति ॥ एइ ति[8] घोडा एह थलि ॥ एइ पेच्छ ॥

**अदस ओइ ॥ ३६४ ॥**

अपभ्रंशे अदसः स्थाने जस्-शसोः परयोः ओइ[9] इत्यादेशो भवति ॥

जइ पुच्छह घर वड्डाइं[10] तो वड्डा घर[11] ओइ ।
विहलिअ-जण-अब्भुद्धरणु कन्तु कुडीरइ जोइ ॥

अमूनि वर्तन्ते पृच्छ वा ॥

---

१ B नाहुं. २ B भ्रंशि. ३ B बोल्लिज्जइ. ४ P के च व°. ५ B इति त्रय आदे°. ६ B ठाउ. ७ B विहाण. ८ B ते. ९ B ओइत्या°. १० B वड्डाइ. ११ B घरं.

**इदम आयः ॥ ३६५ ॥**

अपभ्रंशे इदम्शब्दस्य स्यादौ आय इत्यादेशो भवति ॥

आयइं लोअहो लोअणइं जाई सरइं न भन्ति ।
अप्पिए दिट्ठइं मउलिअहिं पिएँ दिट्ठइं विहसन्ति ॥
सोसउ म सोसउ च्चिअ उअही वडवानलस्स किं तेण ।
जं जलइ जले जलणो आएणवि किं न पज्जत्तं ॥
आयहो दड्ढ-कलेवरहो जं वाहिउ तं सारु ।
जइ उट्ठब्भइ तो कुहइ अह डज्झइ तो छारु ॥

**सर्वस्य साहो वा ॥ ३६६ ॥**

अपभ्रंशे सर्वशब्दस्य साह इत्यादेशो वा भवति ॥

साहुवि लोउ तडप्फडइ वड्डत्तणहो तणेण ।
वड्डप्पणु परिपाविअइ हत्थिं मोक्कलडेण ॥

पक्षे । सव्वुवि ॥

**किमः काइं-कवणौ वा ॥ ३६७ ॥**

अपभ्रंशे किमः स्थाने काइं कवण इत्यादेशौ वा भवतः ॥

जइ न सु आवइ दूइ घरु काइं अहो-मुहु तुज्झु ।
वयणु जु खण्डइ तउ सहि एसो पिउ होइ न मज्झु ॥

काइं न दूरे देक्खइ ॥

फोडेन्ति जे हिअडउं अप्पणउं ताहं पराइ कवण घॄण ।
रक्खेज्जहु लोअहो अप्पणा बालहे जाया विसम थण ॥

---

१ B °इदम्यादौ. २ B दिट्ठइं. ३ B पिअ. ४ B दड्ढ. ५ P कलेव°. ६ B °हिउं. ७ B ओटब्भ°. ८ B च्छारु. ९ B लोओ. १० B °होत्तणेण. ११ A वड्डुत्तणु. B वड्डुप्पण. १२ B °पावीअ°. १३ P हत्थें. B हत्थे. १४ P काइं. १५ A घर. १६ B मुह तुज्झ. १७ B वयणउजुवं°. १८ B देक्खुइ. १९ P फोडेन्ति. B फोडंति. P and B write रक्खेज्जहु° as the first and फोडेन्ति° as the second half. २० A जि. २१ B हीअ°. २२ B पराइ. २३ A घृण. B घ्रिण. २४ P B तरुणहो.

सुपुरिस[1] कङ्गुहे अणुहरहिं[2] भण कज्जें[3] कवणेण।
जिवँ जिवँ[4] वड्डत्तणु[5] लहहिं[6] तिवँ तिवँ[7] नवहिं[8] सिरेण॥

पक्षे।

जइ ससणेही[9] तो मुइअ[10] अह जीवइ निन्नेह।
बिहिंवि[11] पयारेहिं[12] गइअ धण किं गज्जहि[13] खल मेह॥

**युष्मदः सौ तुहुं[14] ॥ ३६८ ॥**

अपभ्रंशे युष्मदः सौ परे तुहुं इत्यादेशो भवति॥

भमरु म रुणझुणि[15] रण्णडइ सा दिसि जोइ म रोइ।
सा मालइ देसन्तरिअ जसु तुहुं मरहि विओइ॥

**जस्-शसोस्तुम्हे तुम्हइं[16] ॥ ३६९ ॥**

अपभ्रंशे युष्मदो जसि शसि च प्रत्येकं तुम्हे तुम्हइं इत्यादेशौ भवतः॥ तुम्हे तुम्हइं जाणह। तुम्हे तुम्हइं पेच्छइ॥ वचनभेदो यथासंख्यनिवृत्त्यर्थः॥

**टा-ङ्यमा पइं[17] तइं[18] ॥ ३७० ॥**

अपभ्रंशे युष्मदः टा ङि अम् इत्येतैः सह पइं तइं इत्यादेशौ भवतः॥ टा।

पइं मुक्काहंवि वर-तरु[19] फिट्टइ पत्तत्तणं न पत्ताणं।
तुह पुणु[20] छाया जइ होज्ज[21] कहवि ता तेहिं पत्तेहिं॥
महु हिअउं तइं[22] ताए तुहुं[23] सवि अन्नें[24] विनाडिज्जइ।
पिअ[25] काइं[26] करउं हउं काइं तुहुं मच्छें[27] मच्छु गिलिज्जइ॥

ङिना।

---

१ A सपुरिस कंगुहिं. २ B °हरीहि. ३ B कज्जे. ४ A B जिम्वजिम्व. ५ B °त्तण. ६ B लहइ. ७ A B तिम्वतिम्व. ८ B नवहि. ९ A ससिणे°. १० A मुईअअह. B मुईअह. ११ B बेहिंवि. १२ P °यारहिं. १३ B गज्जहिं. १४ P तुहु. B तुहं. १५ P रुणु°. १६ A °तुम्हतुम्हेइं. १७ P पइ. १८ P तइ. १९ A वरु. २० B पुण. २१ B होइज्ज. २२ P तइ. २३ P तुहु. B तुहं. २४ B अन्ने. २५ P प्रिअ. B प्रिय. २६ P काइँ. २७ B मच्छे.

पइं[1] मइं[2] बेहिंवि[3] रण-गयाहिं को जयसिरि तंकेइ[4] ।
केसहिं लेप्पिणु[5] जम-घरिणि[6] भण सुहु को थक्केइ ॥

एवं तइं[7] ॥ अमा ।

पइं[8] मेल्लन्तिहे[9] महु मरणु[10] मइं[11] मेल्लन्तहो तुज्झु[12] ।
सारस जसु[13] जो वेग्गला सोवि कृदन्तहो सज्झु[14] ॥

एवं तइं ॥

**भिसा तुम्हेहिं ॥ ३७१ ॥**

अपभ्रंशे युष्मदो भिसा सह तुम्हेहिं इत्यादेशो भवति ॥

तुम्हेहिं अम्हेहिं जं किअउं दिट्ठउं[15] बहुअ-जणेण ।
तं तेवड्डुउं समर[16]-भरु निज्जिउ एक्क-खणेण ॥

**ङसि-ङस्भ्यां तउ तुज्झ तुध्र[17] ॥ ३७२ ॥**

अपभ्रंशे युष्मदो ङसिङस्भ्यां सह तउ तुज्झ तुध्र इत्येते त्रय आदेशा भवन्ति ॥ तउ होन्तउ[18] आगदो । तुज्झ[19] होन्तउ[20] आगदो । तुध्र होन्तउ आगदो ॥ ङसा ।

तउ गुण-संपइ तुज्झ[21] मदि तुध्र अणुत्तर खन्ति ।
जइ उप्पत्ति अन्न जेण[22] महि-मंडलि सिक्खन्ति ॥

**भ्यसाम्भ्यां तुम्हहं ॥ ३७३ ॥**

अपभ्रंशे युष्मदो भ्यस् आम् इत्येताभ्यां सह तुम्हहं इत्यादेशो भवति ॥ तुम्हहं होन्तउ आगदो । तुम्हहं केरउं धणु ॥

**तुम्हासु सुपा ॥ ३७४ ॥**

अपभ्रंशे युष्मदः सुपा सह तुम्हासु इत्यादेशो भवति ॥ तुम्हासु ठिअं ॥

---

१ P पइं. २ P मइं. ३ A वेहिवि. ४ B थक्केइ. ५ A लिप्पिणु. ६ A घरणि. ७ P तइं. ८ P पइं. ९ A मेल्लंतिहिं. १० B मरण. ११ P मइं. B मई. १२ A तुज्झ. १३ B जस. १४ B °ज्झु ॥ भि°. १५ B दिट्ठउ. १६ B समरु. १७ P तुध्राः. १८ B होतउ. १९ A तुज्झु. २० A हुंतउ. B होतउ. २१ B तुज्झु. २२ P जणा.

**सावस्मदो हउं ॥ ३७५ ॥**

अपभ्रंशे अस्मदः सौ परे हउं इत्यादेशो भवति ॥ तसु हउं कलि-जुगि दुल्लहहो ॥

**जस्-शसोरम्हे अम्हइं ॥ ३७६ ॥**

अपभ्रंशे अस्मदो जसि शसि च परे प्रत्येकम् अम्हे अम्हइं इत्या-देशौ भवतः ॥

अम्हे थोवा रिउ बहुअ कायर एम्व[1] भणन्ति ।
मुद्धि निहालहि गयणे-यलु[2] कइ जण जोण्ह करन्ति[3] ॥
अम्बणु लाइवि जे गया पहिअ[4] पराया केवि ।
अवस न सुअहिं सुहच्छिअहिं[5] जिवँ[6] अम्हइं तिवँ[7] तेवि ॥

अम्हे देक्खइ । अम्हइं देक्खइ । वचनभेदो यथासंख्यनिवृत्त्यर्थः ॥

**टा-ड्यमा मइं ॥ ३७७ ॥**

अपभ्रंशे अस्मदः टा ङि अम् इत्येतैः सह मइं[8] इत्यादेशो भवति ॥ टा ।

मइं जाणिउं[9] पिअ विरहिअहं कवि धर होइ विआलि ।
णवर[10] मिअङ्कुवि तिह तवइ जिहं[11] दिणयरु खय-गालि ॥

ङिना । पइं[12] मइं बेहिंवि[13] रण-गयहिं ॥ अमा । मइं मेल्लन्तहो तुज्झु ॥

**अम्हेहिं भिसा ॥ ३७८ ॥**

अपभ्रंशे अस्मदो भिसा सह अम्हेहिं इत्यादेशो भवति ॥ तुम्हेहिं अम्हेहिं जं किअउं[14] ॥

---

१ B एम्व. २ B गयणय°. ३ A करेंति. ४ P पहिआ. ५ B सुअच्छि°. ६ A B जिम्व. ७ A B तिम्व. ८ P मइं. ९ A जाणिउ. १० B नवर. ११ A जिहि. B जिण. १२ P पइं. १३ A बेहिवि. १४ B कीअं.

**महु मज्झु ङसि-ङस्भ्याम् ॥ ३७९ ॥**

अपभ्रंशे अस्मदो ङसिना ङसा च सह प्रत्येकं महु मज्झु इत्यादेशौ भवतः ॥ महु होन्तउ[1] गदो । मज्झु होन्तउ गदो ॥ ङसा ।

महु कन्तहो[2] बे दोसडा हेल्लि[3] म झंखहि[4] आलु ।
देन्तहो[5] हउं पर उव्वरिअ जुज्झन्तहो[7] करवालु ॥
जइ भग्गा पारकडा[6] तो सहि मज्झु प्रिएण[8] ।
अह भग्गा अम्हहं तणा तो तें[9] मारिअडेण ॥

**अम्हहं भ्यसाम्भ्याम् ॥ ३८० ॥**

अपभ्रंशे अस्मदो भ्यसा आमा[10] च[11] सह अम्हहं इत्यादेशो भवति ॥ अम्हहं होन्तउ[12] आगदो ॥ आमा ॥ अह भग्गा अम्हहं तणा ॥

**सुपा अम्हासु ॥ ३८१ ॥**

अपभ्रंशे अस्मदः सुपा सह अम्हासु इत्यादेशो भवति ॥ अम्हासु ठिअं ॥

**त्यादेराद्य-त्रयस्य बहुत्वे हिं न वा ॥ ३८२ ॥**

त्यादीनामाद्यत्रयस्य संबन्धिनो बहुष्वर्थेषु[13] वर्तमानस्य वचनस्यापभ्रंशे हिं इत्यादेशो[14] वा भवति ॥

मुह-कबरि-बन्ध तहे सोह धरहिं नं[15] मल्ल-जुज्झु[16] ससि-राहु करहिं[17] ।
तहे सहहिं कुरल भमर-उल-तुलिअ नं तिमिर-डिम्भ खेल्लन्ति मिलिअ ॥

**मध्य-त्रयस्याद्यस्य हिः ॥ ३८३ ॥**

त्यादीनां मध्यत्रयस्य[18] यदाद्यं वचनं तस्यापभ्रंशे हि इत्यादेशो वा भवति ॥

---

१ B होतउ. २ B कंतह. ३ A हिल्लि. ४ B झंखलिहिं. ५ B दिंत°. ६ B पार. ७ A जुझतहो. P जुज्झन्तहो. ८ P प्रिएण. ९ A ते. १० P अमा. ११ B च अम्ह°. १२ P °उ गदो. १३ A °र्थे व°. १४ A B °शो भ°. १५ B न. १६ B जुज्झ. १७ B करेहिं. १८ B °ध्यमत्र°.

बप्पीहा पिउ पिउ भणवि कित्तिउ[1] रुअहि हयास[2] ।
तुह जलि मह्दु[3] पुणु[4] वल्लहइ बिहुंवि न पूरिअ आस ॥

आत्मनेपदे ।

बप्पीहा कइं[5] बोल्लिएण[6] निग्घिण वार इ वार ।
सायरि भरिअइ विमल-जलि लहहि न एक्कइ धार ॥

सप्तम्याम् ।

आयहिं जम्महिं[7] अन्नहिंवि[8] गोरि सु[9] दिज्जहि[10] कन्तु ।
गय मत्तहं[11] चत्तङ्कुसहं जो अब्भिडइ हसन्तु ॥

पक्षे । रुअसि । इत्यादि ॥

**बहुत्वे हुः ॥ ३८४ ॥**

त्यादीनां मध्यमत्रयस्य[12] संबन्धि बहुष्वर्थेषु[13] वर्तमानं यद्वचनं तस्यापभ्रंशे[14] हु इत्यादेशो[15] वा भवति ॥

बलि अब्भत्थणि[16] महु-महणु लहुईहूआ[17] सोइ ।
जइ इच्छहु[18] वड्डत्तणउं देहु म मग्गहु[19] कोइ ॥

पक्षे । इच्छह । इत्यादि ॥

**अन्त्य-त्रयस्याद्यस्य उं ॥ ३८५ ॥**

त्यादीनामन्त्यत्रयस्य यदाद्यं वचनं तस्यापभ्रंशे उं इत्यादेशो वा भवति ॥

विहि विनडउ पीडन्तु गह मं धणि करहि[20] विसाउ ।
संपइ कड्ढउं[21] वेस जिवं[22] छुडु अग्घइ ववसाउ[23] ॥

बलि किज्जउं सुअणस्सु[24] ॥ पक्षे । कड्ढामि[25] । इत्यादि ॥

---

१ P B केत्तिउ. २ B अयास. ३ A मुह. ४ A B पुण. ५ P काइ. ६ P बोलिएं. ७ P जहि महु अ°. B जमि महु अ°. ८ A अन्नहि. ९ A म. १० P देज्जहि. B देज्जहिं. ११ B मत्तह. १२ P मध्यत्र°. १३ A °र्थे व°. १४ A तस्य हु. १५ B °शो भ°. १६ B अच्छणि. १७ B °ईहुआ. १८ B इच्छह. १९ B मगह. २० B °रहिं. २१ P B कड्डउ. २२ A B जिव. २३ A °ओ. २४ B °स्स. २५ P B कड्ढामी°.

बहुत्वे हुं ॥ ३८६ ॥

त्यादीनामन्त्यत्रयस्य संबन्धि[1] बहुष्वर्थेषु वर्तमानं यद्वचनं तस्य हुं इत्यादेशो वा भवति ॥

खग्ग[2]-विसाहिउ[3] जहिं लहहुं[4] पिय तहिं देसहिं[5] जाहुं ।
रण-दुब्भिक्खें[6] भग्गाइं विणु जुज्झें[7] न वलाहुं[8] ॥

पक्षे । लहिमु । इत्यादि ॥

हि-स्वयोरिदुदेत् ॥ ३८७ ॥

पञ्चम्यां[9] हिस्वयोरपभ्रंशे इ उ ए इत्येते त्रय आदेशा वा भवन्ति ॥

इत् ।

कुञ्जर सुमरि म सल्लइउ सरला सास म मेल्लि ।
कवल जि[10] पाविय विहि-वसिण[11] ते चरि[12] माणु म मेल्लि ॥

उत् ।

भमरा एत्थु विलिम्बडइ केवि[13] दियहडा विलम्बु ।
घण-पत्तलु[14] छाया-बहुलु[15] फुल्लइ जाम[16] कयम्बु ॥

एत् ।

प्रिय[17] एम्वहिं[18] करे[19] सेल्लु करि छड्डहि[20] तुहुं करवालु ।
जं[21] कावालिय बप्पुडा[22] लेहिं अभग्गु[23] कवालु ॥

पक्षे । सुमरहि[24] । इत्यादि ॥

वर्त्स्यति-स्यस्य सः ॥ ३८८ ॥

अपभ्रंशे भविष्यदर्थविषयस्य[25] त्यादेः स्यस्य सो वा भवति ॥

---

१ B °त्यसंबंधिषु ब°. २ A खग्गिवि°. ३ P °साहिउं. ४ A लहुहुं. ५ B °सहि. ६ A दुब्भिभिक्ख. B दुब्भिक्खे. ७ B विण जुज्झे. ८ P चलाहुं. B विलाहुं. ९ B पंचम्यां. १० B ज. ११ A वसिणि. B वसेण. १२ B चर. १३ A किवि. १४ B °पत्तल. १५ B बहुल. १६ A B जाम्व. १७ P पिअ. १८ A एमहिं. १९ B करि. २० A छड्डहिं. B छड्डहि. २१ P जे. २२ B बप्फुडा. २३ B अभग्ग. २४ A सुम्भमर°. B सुमर°. २५ A °दर्थे वि°.

